॥ हेरम्बोपस्थानम् ॥

प्रथमः खण्डः (शशिवदनावृत्तम्)

श्रियमसमानां मम शुभनामा ।
दिशतु गणानां पतिरतिधामा ॥ १॥

विजितजराधिं विनिहतरोगम् ।
द्विरदमुखो मे वितरतु योगम् ॥ २॥

वितरतु मह्यं निजपदभक्तिम् ।
गणपतिरग्र्यामपि भुजशक्तिम् ॥ ३॥

हरतनयो मे विभुरतिहृद्यम् ।
वितरतु भूतप्रविमलविद्याम् ॥ ४॥

मम करिवक्त्रः प्रभुरनवद्याम् ।
दिशतु भविष्यद्विदमुडुविद्याम् ॥ ५॥

निजविषयाजिष्वघहिमभानो ।
इममविजेयं कुरु हरसूनो ॥ ६॥

सुमधुरमाध्वीधरपदजातम् ।
करिमुख दासं कुरु कविमेतत् ॥ ७॥

गणपतिरूपं मनसि करोमि ।
गणपतिकिर्तीं वचसि तनोमि ॥ ८॥

मम गणनाथः शमयतु पापम् ।
सपदि विमुष्णात्वपि परशापम् ॥ ९॥

शशिवदनानां नवकृतिरेषा ।
भजतु गणेशं पतिमिव योषा ॥ १०॥

द्वितीयः खण्डः (मदलेखावृत्तम्)

आह प्राज्ञजनस्त्वां मूलाधारनिशान्तम् ।
मन्दे सुप्तमिभास्य ज्ञे युक्ते विलसन्तम् ॥ ११॥

अस्ति व्योम्नि गुरुर्यस्तस्यैव त्वमिहासि ।
विघ्नेशानविवर्तः सद्भक्तेषु विभासि ॥ १२॥

कोऽपि प्राभवशाली मूलाधारविहारी ।
प्रज्ञासिद्धिवधूभ्यं श्लिष्टो भात्यघहारी ॥ १३॥

आशा मे तव शक्तिं देहे द्रष्टुमपाराम् ।
पातुं चेश्वरसूनो मूर्धन्यामृतधाराम् ॥ १४॥

या चित् सा तव माता यः श्रेष्ठः स पिता ते ।
सिद्धिर्बाह्यमतिर्ये ते नाथ प्रमदे ते ॥ १५॥

या लिप्सा हृदये मे तां पूर्णां कुरु मा वा ।
एषाङ्गीक्रियतां मे मत्तेभानन सेवा ॥ १६॥

ना खे याति सुरो वा त्वं चेत् किञ्चिदुदास्यम् ।
आधारे विदधासि स्कन्दस्याग्रज लास्यम् ॥ १७॥

न स्वार्थे मम यत्नो निःस्वार्थे मम सोऽयम् ।
उद्योगः शिवसूनो सद्यो देहि सहायम् ॥ १८॥

माहात्म्यं ननु वक्तुं कः शक्तः पुरुषस्ते ।
हस्तीन्द्रानन भाग्यं सर्वेषां तव हस्ते ॥ १९॥

एतः सम्मदकत्रीर्हैरम्बीर्मदलेखाः ।
सेवन्तां कविभृङ्गाश्चान्द्रीर्भा इव लेखाः ॥ २०॥

तृतीय खण्डः (इन्द्रवज्रावृत्तम्)

एकादशानां प्रवरं सुतानां रुद्रस्य मन्त्रधिपतिं नमामि ।
शास्त्राणि सर्वाण्यपि यस्य कीलाः सूर्यानपोह्यं तिमिरं हरन्ति ॥ २१॥

प्राज्ञेन बुद्धया यदकारि पद्यं सधारणस्तत्र तवोपकारः ।

हेरम्ब यन्मन्त्रमृषिश्चकार व्यक्तोविशिष्टस्तव तत्र यत्र ॥ २२॥

जिह्वास्थलं नाथ विगाहमानं त्वामाहुरुच्छिष्टमयि छलोक्त्या ।
उच्छिष्टता चेत्तव रुद्रसूनो स्वाध्यायनिष्ठीवनतोर्भिदा का ॥ २३॥

सर्वाणि धान्यानि च भक्षयन्तं दन्तैः शितैर्देव सहायवन्तम् ।
एतं बिलस्थं रसनाह्वयं ते वाहं विदो मूषिकमामनन्ति ॥ २४॥

आधारचक्रे वसतो गणेश ज्योतिर्मयाणोर्ज्वलतः सदाते ।
एकः पचत्यन्नमशेषमूष्मा सम्प्रेरयन्त्य इमास्तु वाचः ॥ २५॥

वैश्वानरोऽग्निः सकलस्य जीवो वागिन्द्रियाग्निः शिवनन्दन त्वम् ।
यो वेद नैव युवयोर्विभेदं पिण्डेषु ना मुह्यति स प्रसङ्गे ॥ २६॥

त्वां ब्रह्मणस्पत्यभिधानमाहुः केचिद्विभोरीशपदस्य पुत्रम् ।
अन्यैर्बृहस्पत्यभिधान उक्तो धीरैर्विभोरिन्द्रपदस्य मन्त्री ॥ २७॥

जिह्वैव वेदिस्तव तोयपूता लोकप्रसङ्गस्तव तत्र धूमः ।
ज्वाला जगन्नाथकथा पवित्रा चेतो घृतं जुह्यति यत्र सन्तः ॥ २८॥

विद्युन्मयीमूर्तिरगादि जिष्णोर्या मौनिभिः सैव तव स्वरूपम् ।
इन्द्रस्य भेदस्तव चोदितो यः स प्राणविद्युत्तनुभेदमूलः ॥ २९॥

दिव्याग्निगात्रं धिषणा कलत्रं भर्गस्य पुत्रं प्रणतस्य मित्रम् ।
दिव्याग्निरुचो भजन्तामेताः करीन्द्राननमिन्द्रवज्राः ॥ ३०॥

चतुर्थः खण्दः (वसन्ततिलकवृत्तम्)

किं बृंहितानि कुरुषे कलुषेण भग्ने
मग्ने महाविपदि देव निजे विवर्ते ।
निद्रामि चेद्वरद बोधय हस्तघाता -
द्गच्छामि चेदपथमाशु निवर्तयस्व ॥ ३१॥

वेषस्त्वायमपरो यदि देव नाट्य-
मारभ्यतां तदुचित्तं किमुपैषि मौनम् ।
एतां प्रभो यवनिकामपसारयन्तु

सक्षाद्गणास्तव कुतः क्रियते विलम्बः ॥ ३२॥

एतत्तमो नयनशक्तिहरं गुहायं
मर्गं रुणद्धि न विलोकितुमस्मि शक्तः ।
स्नेहोऽस्ति काचन दशास्ति विभो कटाक्ष-
ज्योतिर्लव सदय देहि पुरो व्रजेयम् ॥ ३३॥

घोरं करोमि न तपो यदि तेऽपराधः
किं प्रेरणं न कृतवानसि रुद्रसूनो ।
सम्प्रेरितश्च भवता यदि नाचरेयं
सम्प्रेरणस्य तव का गजवक्त्र शक्तिः ॥ ३४॥

कार्यं न मे किमपि तत् खलु निर्जराणां
रूपं न मे किमपि तत्तव कोऽपि वेषः ।
इष्टं नु कष्टमथ कस्य करीन्द्रवक्त्र
शिष्टं तु मे किमपि नाम नराङ्गसङ्गि ॥ ३५॥

नामापि तत्तव भवत्यथवा गजास्य
चर्चा विनश्वरतमे तनुकञ्चुके का ।
विष्णोरिवेन्दुधवलं भविता यशश्चेत्
तद्दन्तकान्तिषु तवैव लयं प्रयातु ॥ ३६॥

स्थूलां तनूमसुमशेषमनोरथानां
स्थानं मनश्च धिषणां प्रमदं च मूलम् ।
आक्रम्य कोशमखिलं च विभो खलारे
विध्नाधिराज मयि दर्शय ते विभूतिम् ॥ ३७॥

देवी मतिर्जलपत्रविशालनेत्रा
देवी च सिद्धिरकलङ्कसुधाकरास्या ।
छयोष्णता च दिननाथमिव ज्वलन्तं
नित्यं भवन्तमिभवक्त्र विभो भजे ते ॥ ३८॥

सिद्धेन्द्रवेषभृति भूमिहिताय रुद्रे
कैलासशैलमधितिष्ठति वज्रपाणिः ।
धृत्वा गजेन्द्रमुखवेषममुष्य पुत्रो
भूत्वा विभुर्नयति पारिषदानशेषान् ॥ ३९॥

सम्मोदयन्तु हृदयं द्विरदाननस्य

देवस्य सिद्धिधिषणा हृदयेश्वरस्य ।
एता वसन्ततिलकाः कविकुञ्जरेण
गीताः कयाऽप्यमलभावनया युतेन ॥ ४०॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य
नरसिंहसूनोः गणपतेः कृतिर्हैरम्बोपस्थानं समाप्तम् ॥